नमःसामवेदाय

# जैमिनीयसामशाखायाः साम्नां नामकरणसिद्धान्तः

**श्री गिरिजाप्रसाद षडङ्गी**
अध्यापकः, सामवेदविभागः
श्रीवेङ्कटेश्वरवेदविश्वविद्यालयः
तिरुपति, आन्ध्रप्रदेशः

**"सामाखिलं सकलवेदगुरोर्मुनीन्द्रात्**
**व्यासादवाप्य भुवि येन सहस्रशाखम् ।**
**व्यस्तं समस्तमपि सुन्दरगीतरागं**
**तं जैमिनिं तलवकारगुरुं नमामि ।।"**

प्राचीन मन्त्रद्रष्टृभिः महर्षिभिः साक्षात्कृत अनन्तज्ञानैकवेदराशेः प्रयोग भेदेन, सिद्धान्त भेदेन च अस्माकं पुरतः मन्त्रसमुदायस्य भिन्न भिन्न विषयपुरस्कृत्य सिद्धान्तः प्रदर्शितवन्तः। ततः विषयमेकं यत् जैमिनीयसामवेदे साम्नां नामकरणं कथं जातमिति अत्र विषयवस्तुमाधारीकृत्य चर्चयामः।

जैमिनीय सामगाने पूर्वभागे- आग्नेयः, तद्धः, बृहती, असावि, ऐन्द्रम्, पवमानम्, आरणम् - व्रतपर्व, अर्कपर्व, द्वन्द्वपर्व, शुक्रियपर्व, महानाम्नीकपर्व, औपनिषदपर्व इति , उत्तरभागे- द्वादशाहः, अभ्यूहः, एकाहः एवं अहीन रूपेण च विभजिताः सन् सम्पूर्ण सामभागः इदानीं उपलभ्यते। ग्रामगेयमाधारीकृत्य ऊहगानं आरण्यगानमाधारीकृत्य ऊषाणी(रहस्य)गानं विद्यते ।अतः अत्र सर्वत्र आधाराधेयत्वेन कल्पना करणीया । अनेन ग्रामगेयतः ऊषाणीगान पर्यन्तं साम्नां नामग्रहीतुं शक्यते। यदा वयं साम्नां नामकरण सन्दर्भे चिन्तयामः, तदा केचन आधाराः स्पष्टरूपेण अस्माकं पुरतः आगच्छन्ति, ते एते उदाह्रियन्ते - यथा

1. **ऋषीणां नाम आधारीकृत्य-** साम्नां मुख्याधारभूताः सामगानकर्तारः ऋषयः । प्राचीन ऋषयः यद्यत् साम दृष्टवन्तः तेषां ऋषीणां नाम्नैव तेषां तेषां साम्नां नाम सम्पन्नम्। बहुलतया ऋषिनाम्नैव साम्नः नाम विद्यते ।। यथा - आकूपारम्- अकूपारा%%ङ्गिरस्यासीत् (ता.ब्रा.9.2.14) अकूपारो वा एतेन कश्यपोजेमानं महिमानमगच्छत् (ता.ब्रा.15.5.30), अनुपेन दृष्टं साम आनूपम्। (ता.ब्रा.13.3.16) आन्धीगवम्- आन्धीगुर्वा एतत्पशुकामः सामापश्यत्। (ता.ब्रा.8.5.12), आष्टादंष्ट्रम्- अष्टादंष्ट्रो वैरूपो....एते सामनी अपश्यत्। (ता. ब्रा. 8.9.21), ऐढतम्- इढन्वा एतेन

काव्योऽञ्जसा स्वर्गं लोकमपश्यत्। (ता.ब्रा.14.9.16), औक्ष्णोरन्ध्रम्- उक्ष्णोरन्ध्रो वा एताभ्यां काव्योऽञ्जसा स्वर्गं लोकमपश्यत्। (ता.ब्रा.13.9.18), और्णायवम्-उर्णायुर्नाम गन्धर्वः तत्सम्बन्धिनी और्णायवम् ( आर्ष. ब्रा. 5.1.10),औदलम्- उदलो वा एतेन वैश्वामित्रः प्रजातिं भूमानमगच्छत् औदलम् ( ता.ब्रा.14.11.34), कौल्मलबर्हिषीयम्- कुल्मलबर्हिर्वा एतेन प्रजातिं भूमानमगच्छत् (ता. ब्रा. 15.3.21), कालेयम्- कलेर्ढक्(पा.4.2.8) वामदेव्यम्- वामदेवाड्ड्यड्ड्यौ (पा.4.2.9) गौरिवीतम्-गौरिवीतिर्वा एतच्छाक्त्यो ब्राह्मणोऽतिरिक्तमपश्यत्तद्गौरीवितमभवत् । ता. ब्रा. 11.5.14,वार्शम्- वैजानस्य पुत्रो वृशो नाम कश्चिदृषिः।(ता.ब्रा.13.3.11)

2. **देवतानाम आधारीकृत्य-** बहूनि सामानि देवतानाम्नैव प्रसिद्ध्यन्ति।। तस्मिन् साम्नि नामायवरूपेण वर्तमानदेवतायाः अनुग्रहार्थं तत्तसामोपयुज्यते। यथा- अग्निदेवतायाः आग्नेयम्, पवमानसोमदेवतायाः पावमानम्, इन्द्रदेवतायाः ऐन्द्रम् इत्यादि । एतत्सन्दर्भ पाणिनीय सूत्रे उल्लेखः दृश्यते- सास्य देवता (पा.4.2.24), अन्यदपि षष्ठीविभक्त्या युक्तम् । सामनाम यथा- अग्नेर्वैश्वानरस्यसाम ,इन्द्रस्यप्रियम्, इन्द्रस्यसंजयम्, द्युतानस्यसाम।। पुनः कस्यचित् साम्नः विभक्त्या प्रत्ययेन वा नामकरणम् यथा - आन्तरिक्षम्, द्यावापृथिव्योःसाम, सोमसाम, यौधाजयम्, रौरवम् इत्यादि।

3. **छन्दांस्याधारीकृत्य-** गायत्र्यादिछन्दोयुक्तासु ऋक्षु गीयमानानि सामान्यपि तेनैव नाम्ना प्रसिद्धिं गतानि । उदा-तत्सवितुर्वरेण्यं ऋक् गायत्रछन्दसि विद्यते अतः गायत्रम् इति (सा.1.1.1), पिबासोममिन्द्र इति ऋक् विराट् छन्दसि विद्यते इति तस्याः वैराजम् इति नाम सम्पन्नम् (ग्रा.10.5)।। यदिवीरो अनुष्याद् ऋक् बृहती छन्दसि विद्यते ततः बृहदाग्नेयम् (ग्रा.गे. 2.9.89.1)।।

4**.** **यज्ञानुष्ठानाङ्गाधारेण -** यस्यिन् यज्ञे यस्य साम्नः प्रयोगः तत्सम्बन्धाधारेण नामकरणम्- उदा- पृष्ठानि भवन्ति ...प्राजपत्यम्-पृष्ठम् ( रथन्तरम्, वैराजम्, वैरूपम्, शाक्वरम्, रैवतं च पृष्ठसामानि ) । (ता. ब्रा.4.8.9), अवभृथसाम , ऐध्मवाहम्, प्रजापतेर्हृदयम्, महादिवाकीर्त्यम्, यज्ञसारथि, सन्तनि इत्यादि ।।

5. **मन्त्रे प्रतीयमानशब्दविशेषमाधारीकृत्य-** साम्नः आधारभूतासु ऋक्षु विद्यमान शब्दादेव साम्नः नाम ज्ञायते- उदा- ऋक्-मूर्धानं....वैश्वानरमृत आ जातमग्निम्- वैश्वानरम्, यज्ञायज्ञावो अग्नये... ऋगाधारेण- यज्ञायज्ञीयम्, अश्वन्नत्वावारवन्तं... ऋगाधारेण वारवन्तीयम्, गायन्तित्वा गायत्रिणं... उद्वंशमिवयेमिरे- उद्वंशीयम् (साम-342), जराबोध तद्विविड्ढि- जराबोधीयम् (साम-15), विशोविशोवोअतिथिं..- विशोविशीयम् (साम.87), श्रायन्त इव सूर्य... - श्रायन्तीयम् (साम.350), त्यमुवःसत्रासाहं... - सत्रासाहीयम् (साम-170), श्रुधीहवं तिरश्च्या...- तैरश्च्यम्(साम-346),रेवतीर्नः सधमाद...- रैवतम् (साम-156)।।

6. **निधनमाधारीकृत्य-** निधनभक्त्याधारेणापि साम्नः नाम क्रियते।। यज्ञे साम्नः अन्तिमपर्वणि क्रियमाणगानविशेषः निधनभक्तिः, उदा- इष्ठाहोत्रीयम्, सहोरयिष्ठीय, सुतंरयिष्ठा, यज्ञायज्ञीयम्, घृतश्चुन्निधनम्, हाविष्कृतम्, संश्रवसे, सत्यश्रवसे, श्रवसे, वषट्कारनिधनम्, मधुश्चुन्निधनम्, दक्षनिधनम् , धर्मम्, धेनुः, विधर्मम्, भर्गः, भद्रम्, हरिश्रीनिधनम्, पयः, ज्योतिः, विश्वज्योतिः, श्रेयः इत्यादयः।।

यत्र ऋषेः देवतायाश्च नाम्ना सह निधनं भवति तत्र तत् साम्नः नाम भवति- उदा- आष्कारणनिधनंकाण्वम् (कण्वऋषिः आष् निधनम्), ऐडमायास्यम् (इडानिधनम् आयास्य ऋषिः), त्रिणिधनमायास्यम्, अध्यर्द्धेडंसोमसाम (इडानिधनम् सोमदेवता)।।

7. **लक्षणमाधारीकृत्य-** यथा धावतां पुरुषाणां गतिपरीक्षणार्थं आजिः कल्पते। (आ,ब्रा. 275) उदा- आजिगम् (आ.ब्रा.15.9.6) ।।

8. **कर्मफलमाधारीकृत्य-** ऐहिक आमुष्मिक फलप्राप्तये साम्नः प्रयोगः क्रियते तदाधारेण नामपि क्रियते । यथा - यज्ञकर्मणि मन्त्रादर्शनात् कर्मवैकल्याभावाय तदुपयुक्तमन्त्रेण पूरणम् - अच्छिद्रम् (ता.ब्रा. 14.9.36), देवतानां स्वर्गगमनार्थं अभिवृत्तिसाधनार्थं- अभीवर्तः (ता.ब्रा.4.3.1-2) आयुर्वृद्ध्यर्थे-आतीषादीयम् (ता.ब्रा.12.11.16) (आयुर्वाआतीषादीयमायुषो-वरुध्यै), अन्नवाचकोयम्-इळान्दम् (ता.ब्रा.15.3.14), कामनापूर्तये- गूर्द्दः (ता.ब्रा.13.12.5), अन्नप्राप्त्यर्थं-पृश्नि (ता.ब्रा.12.10.25), रै शब्दः धनवाची तत्प्राप्तये - रैवतम्, श्येनः - श्येनः

शंसनीयगतिः अग्निः तस्य प्रतिपादकं साम, वाजि शब्दः अन्नवाची तत्प्रतिपादकं साम - वाजदावर्यम्, पशुलाभाय-पौष्कलम्, एतेन वै प्रजापतिः पुष्कलान् पशूनसृजत् (आ.ब्रा.14.9.10) , तेजः प्राप्त्यर्थं - हारायणम्(14.934)।।

साम्नां नामविषये वहूत्र अन्य शाखापेक्षया जैमिनीयानां किञ्चिद्भेदः दरीदृश्यते।अप्रकटित तालपत्र हस्तप्रतग्रन्थस्य च सम्यग् संशोधने पारम्परिक नाम एवं च अन्यत्र विद्यमान साम्नां नाम विषये सम्यक् शुद्धाशुद्ध परिक्षितुं शक्यते। यावत् पर्यन्तं वयं एददर्थं कटिबद्धाः न भवामः तावत् पर्यन्तं साम्नां उपलब्ध नामग्रहणे एव सन्तुष्टि भवामः।

इतोपि अन्यै आधारैश्च इतरेषां बहूनां साम्नां नामान्युपलभ्यन्ते । ब्राह्मणग्रन्थेष्वपि आख्यायिकानां आधारेण साम्नां नामानि उपलभ्यन्ते ।।तत्सर्वं परिशीलनीयम्।

अविदित्वा ऋषिच्छन्दोदैवतं योगमेव वा ।
योध्यापयेज्जपेद्वापि पापीयान् स तु जायते।। (आ.ब्रा.290)